नं० ४९२८ = ४९२९

नाम - "क" सप्तशती कवच विवरणम् "एवं "अर्गला स्तोत्र व्याख्यानम्

कर्त्ता - नीलकण्ठ भट्ट० रङ्ग॰ भट्टपुत्रः

पत्रसंख्या - २३ पत्राणि खंडितं ×

विषय० - तंत्रम्.

दु.क.
१

ॐ श्रीगणेशाय नमः ॐ श्रीदुर्गादेव्यै नमः बंधूकबंधूभवदाननायामायामेवदामीकृत।
प्राणाशिषो: मानंदहृद्दारकवंदितांघ्रेर्मास्तः शिवायावयमेवदासाः १ तिष्ठे प्रियेष्वेष्व
न भियो मध्यलोकस्य प्रणतये भवाननतारतारात्मा तं वंदे शंकरं गुरुं २ श्रीलक्ष्मीमा
तरं रंगनाथाख्यं पितरं गुरुं काशीनाथश्रीधराख्यौ गुरून्नत्वा यथामति ३ शैवोपना
मकेनैव नीलकंठेन केनचित् सप्तशत्यंगषट्कस्य व्याख्यानं तन्यतेमुदा ४ तत्र तावद्भग
वत्या यास्तु मायायाः केचिद्विद्वांसो वदंति मायाभगवत्या उपासनाशास्त्रे शक्तात्तथाच मायायामिथ्या
त्वान्मुक्तौ तस्या अनन्वयात्तत्स्वरूपे प्रयमत्पापासनेति नन्वेतेयं भ्रांतिः तापनीयेमायावा एषा
नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं वि
द्यात् य एतां मायाशक्तिं वेद समृत्युं जयति स पाप्मानं तरति सोऽमृतत्वं च गच्छति महतीं
श्रियमश्नुत इति श्रुतौ मायाशक्तिवेदोपोस्ति सम्यक् जयतीतिकालनेन तथा तेवेस
वीशक्तिरनंतवीर्या विश्वस्य बीजं परमासि माया संमोहितं देवि समस्तमेतदिति स्व
तिभिर्विष्णोः शक्तेर्जडायामायायाप्य वोपास्यत्व कीर्तनादिति चेन्न देव्याथर्वशिरसि स
र्वे वेदेवा देवीमुपतस्थुः कासि त्वं महादेवि साब्रवीदहं ब्रह्मरूपिणी मत्तः प्रकृतिपुरु १

षात्मकं जगदिति तथा भुवनेश्वर्युपनिषदि अथातो वोपनिषदं व्याख्यास्यामोऽथ ऐनो ब्रह्म स्वयं ब्र
ह्मस्वरूपिणीमाप्नोतीति तथा भुवनाधीश्वरीतर्यातीता विश्वविमोहिनीति तथा भावनोपनि
षदि स्वात्मैव ललितेति श्रुतिभिः तथा त्रिपुरातापनीय सुंदरीतापनीयादिषु परोरजसे सावदो
मिति गायत्रीयत्रार्थवर्णनप्रतिपादकब्रह्मवाचकत्वेन ह्रींकारबीजस्य कथनात् ह्रींकारमंत्रस्य ब्र
ह्मदेवताप्रतिपादकश्रुत्या च तथा कालीतारोपनिषदादिश्रुतिभिस्तथा स्मृतिभिश्च ब्रह्मरूपिण्या
भगवत्याः पर्वोपासना कथनात् तथाहि स्मृतयः सूतसंहितायां पंचमेऽध्याये अतः संसारनाशाय
साक्षिणीमात्मरूपिणीमाराधयेत्परां शांकरीं प्रपंचोल्लासवर्जितामिति स्कांदे वेदारण्ये प्रवर माहा
त्म्ये परानंदसच्चिदानंदरूपिणी जगदम्बिका सैवाधिष्ठानरूपास्याज्जगद्भ्रांतेश्चिदात्मनीति कू
र्मपुराणे द्वादशेऽध्याये एतत्प्रदर्शितं विप्रा देव्या माहात्म्यमुत्तमं सर्ववेदांतवेदेषु निश्चितं ब्र
ह्मवादिभिः एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवं योगिनस्तत्प्रपश्यंति महादेव्याः परं पदमि
ति परात्परतरं तत्त्वं शाश्वतं शिवमच्युतं अनंतं प्रकृतौ लीनं देव्यास्तत्परमं पदमिति परात्पर
तरं तत्त्वं शाश्वतं शिवमच्युतं आत्मोपलब्धिविषयं देव्यास्तत्परमं पदमिति तथा हालास्ये
श्वरमाहात्म्ये मायाबीजार्थप्रस्तावे सत्स्वरूपः सदाकारो [illegible]कारो यमेनतत्परः चिदाकारः
चिदाकारः शिवाकारो रेफः सर्वार्थसिद्धिदः आनंदरूपयोरैक्यादीकारः सर्वकामदः बिंदु

ङ॰ क॰
२

नादौ तदंतस्योभवेतां मोत्वदावुभौ सच्चिदानंदरूपं तच्छ्रीकंठं बीजं मनीषिभिः सच्चिदानंदरूपं य
त्परं ब्रह्म तदेव ह्रीति देवीभागवते निर्गुणा सगुणा चेति द्विधा प्रोक्ता मनीषिभिः सगुणा रागि
भिः सेव्या निर्गुणा तु विरागिभिरिति ब्रह्मांडपुराणे ललितोपाख्याने चितिस्तत्पदलक्ष्यार्थो
स्यादेकरसरूपिणीत्यादयो ह्यष्टादशपुराणेषूपपुराणेषु च सन्ति तयोर्दृष्टाः ननु तर्हि षो
डशीग्रहणाग्रहणस्य तथोदितानुदितहोमयोः क्रियाविषयत्वात्तत्र शास्त्रो भेदेन विक
ल्पसंभवेऽपि वस्तुस्वरूपस्यैकविधत्वात्तत्र विकल्पासंभवेन भगवतीस्वरूपस्य मायास्वरू
पत्वप्रतिपादकस्य तत्सत्त्व भगवत्या ब्रह्मरूपत्वप्रतिपादकस्य तेर्विरोध इति चेन्न मायाया
वेदांतेषु मिथ्यात्वान्मिथ्यापदार्थस्याधिष्ठाने कल्पितत्वात्तस्याधिष्ठानसत्तातिरिक्तस
त्ताभावान्मायायामधिष्ठानसत्ताप्रवेशान्मायास्वरूपोपासनायामपि सत्तारूपब्रह्मण
एवोपासनासंभवतीत्याशयेन मायास्वरूपत्वप्रतिपादनेऽपि विरोधाभावात् यथा ब्रह्मण
उपासनायामपि न केवलं ब्रह्मणो ग्रहणं किंतु शक्तिविशिष्टस्यैव शक्तेस्तदतिरेकेणा
भावात् केवलस्योपासनासंभवाच्च तथा मायोपासनायामपि न केवलमायाया अव।
स्थानमस्ति येन केवलाया उपासनं भवेत् किंतु ब्रह्माधिष्ठानतयैवावस्थानमि २
ति भगवत्या मायारूपत्वप्रतिपादनेऽपि फलतो ब्रह्मस्वरूपमेव भगवत्याः सिध्यतीति सु

न्योः परस्परं विरोधाभावात् तदुक्तं पावकस्योष्णतेवेयमंशोरिव दीधितिः चंद्रस्य
चंद्रिकेवेयं शिवस्य सहजा ध्रुवेति तथा स्वपदा स्वशिरश्छायां यद्वल्लंघितुमीहते पा
दोद्देशे शिरो न स्यात्तथेयं बैंदवी कलेति तथा च यथाग्नौ होमे ग्निष्टक्यो होमोऽर्थसिद्धः प
वमग्निष्टक्यां होमोऽपि वन्हौ होमोऽर्थसिद्धः तद्वन्मायायां भगवतीत्वेपि ब्रह्मण एव
भगवतीत्वं सिद्धमिति तस्यैवोपासनायां ग्रहणे मायायां मिथ्यात्वप्रतिपादकेषु वाक्ये
षु तद्ब्रह्मणो मिथ्यात्वाभावात् केवलमायाया एव ग्रहणं तस्या मिथ्यात्वेपि तदधिष्ठान
स्य सत्यत्वात् उपासकस्योपास्यमायापदार्थान्तर्गतस्य ब्रह्मांशस्य मोक्षदशायामन
स्तत्वान्न मुक्तावुपास्यस्वरूपत्यागः अत एवान्तर्यामिब्राह्मणे पृथिव्यादिमायान्ता
नां पदार्थानां यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो य
मयतीत्यादिनान्तर्यामिचेतनः सर्वे येनैव देवतात्मपर्वाणीते तथा च सर्वं खल्विदं ब्रह्मे
ति श्रुतिरपि अनन्तश्रीनाम भगवतीत्वेन तत्त्वमभिप्रेत्य स्तुतसंहितायामुक्तं चिन्मात्राश्रय
मायायाः शक्त्याकारे द्विजोत्तमाः अनुप्रविष्टा या संवित् निर्विकल्पा स्वयंप्रभा सदाका
रा सदानंदा संसारोच्छेदकारिणी सा शिवा परा देवी शिवाभिन्ना शिवंकरीति यद्वा
भगवतीस्वरूपप्रतिपादकवाक्येषु ये माया शक्तिकलादिपदाभ्यां सेल्लक्षणया माया

हु.क.
२
3

विशिष्टशक्तिविशिष्टकलाविशिष्टब्रह्मबोधकात्वं तथा च मायाविशिष्टं शक्तिविशिष्टं क-
लाविशिष्टं यद्ब्रह्म तद्भगवतीपदवाच्यमिति फलितोऽर्थः एतेन त्रेधारूपेण संस्थिता नि-
द्रारूपेण भ्रान्तिरूपेण स्मृतिरूपेणेत्यादिकेवलशक्तिवाचकपदानि व्याख्यातानि तेषां प-
देष्वनन्तशक्तिविशिष्टब्रह्मण एव सर्वत्र ग्रहणात् अयमेवार्थः कालोत्तरे उक्तः तथा च।
कालोत्तरे शिवं प्रति देवीप्रश्नवाक्यं भगवन् देवदेवेश मिथ्या मायेति विश्रुता तस्याः क-
थमुपास्यत्वं भवेत् मुक्तावनन्वयात् अज्ञानजायते क्वापि मिथ्या वस्तु निकुत्रचित् देव्या
उपासना चेयं श्रुता मायाश्रिता प्रभो संशयं छिन्धि देवेश प्रारब्धं संवदमे विभो इति श्रुत्वा
वचो देव्या भगवांश्चन्द्रशेखरः उवाच वचनं दिव्यं लोकानां चैव हितप्रदं नाहं सम्यगिमा-
या या उपास्यत्वं ब्रुवे क्वचित् मायाधिष्ठानचैतन्यमुपास्यत्वेन कीर्तितं मायाशक्त्यादि
शब्दास्तेऽविशिष्टस्यैव लक्षकाः तस्मान्मायादिशब्दैस्तु ब्रह्मैवोपास्यमुच्यत इति अ-
त्र पूर्वार्द्धेन मायाधिष्ठानचैतन्यमित्यनेन प्रथमपक्ष उक्तो मायाशक्त्यादीत्यनेनोत्तरार्द्धे-
न द्वितीयः पक्ष उपपादितः एतदभिप्रायेणैव ब्रह्माण्डपुराणे मायावाचकस्यैव ह्रीङ्का-
रस्य मायाविशिष्टब्रह्मवाचकत्वमुक्तं शक्त्यन्तराणि शेषाणि ह्रीकार उभयात्मक इति
उभयात्मकः शिवशक्त्यात्मक इत्यर्थः किं च मायायाः केवलाया उपास्यत्वं वदन्वादी। ६

भीतः प्रश्नः जडाया उपास्यत्वात्तत्तद्देवतास्वरूपाणां प्राणेन्द्रियमनश्चात्मजीवादिमत्त्वक
थं भवेत् द्विविधं हि भगवतीरूपं स्थूलं सूक्ष्मं च तत्र सूक्ष्मं मुख्यं स्थूलं तत्तन्मन्दोपासकानां
दर्शनादिव्यवहारार्थं तत्तदुपासकैरुपासितं सूक्ष्मरूपमेव तत्स्थूलं रूपं गृह्णातीति तत्रैवं
सति सूक्ष्मरूपे चैतन्यानन्दप्रवेशे तद्गृहीते स्थूलरूपेपि चैतन्यानन्दप्रवेशेन तत्तद्देव।
तानां प्राणेन संभाषणादिव्यवहारोच्छेदप्रसङ्गात् तस्मादनिच्छयापि चैतन्यविशिष्टाया
एव तत्तच्छरीररूपायास्तत्त्वं वक्तव्यमिति ननु एवं चेत्किमर्थं मायादिशब्दैर्व्यवहारो भगवत्याः
शास्त्रे क्रियते लक्षणादिदोषाभावाय स्वस्वप्रतिपन्नये ब्रह्मादिशब्दैरेव कुतो न व्यवहारः कि
यत इति चेत् शृणु चतुर्व्यूहात्मकं हि ब्रह्मणो रूपं विराड्ढिरण्यगर्भाव्याकृतब्रह्मरूपं
तत्र देवोपास्तेनामूर्त्तं जगत्सकलस्य पदार्थस्येति शं कार्यं विराड्ढिरण्यगर्भाव्याकृ
तानां तदधिष्ठातॄणां ब्रह्मविष्णुरुद्राणां च मैत्रायणीयश्रुतौ एकैकगुणमयत्वेन कीर्ति
तानां गुणत्रयसाम्यावस्थाया मायायाः प्रकृत्यादिशब्दवाच्यत्वेन तस्याश्च तुरीयब्रह्मा।
श्रितत्वेन तद्देवमायाविशिष्टं तुरीयं ब्रह्मैव भगवत्युपासनायां ग्राह्यमिति तद्दर्शनप्र
काशनार्थं तस्या मायादिशब्दैर्व्यवहारस्य करणात् तथा च मैत्रायणीश्रुतिः तमो वा
इदमेकमग्र आसीत्तत्परेस्यात्तत्परेणेरितं विषमत्वं प्रयात्येतद्वै रजस्तद्रजः खल्वीरितं वि

दु॰ क॰ ४

ध्यमत्वं प्रयाति तद्देवतत्वस्वरूपमिति अनेन वाक्येन मायायास्तमः शब्दितायाः परेण ब्रह्मणा
नित्यसंबंधप्रदर्शनेन जगत्कारणरूपसाम्यावस्थात्मिकं प्रदर्शितं तत्परस्याध्यात्मतमः प्रेरक
त्वं साम्यावस्थमायोपाधिं विना निर्गुणस्य परमात्मनः संभवति अग्रे च तस्यैतात्मनवोद्य
यो हरवल्लवावास्य तामसोंशः सोयोयं रुद्रो यो हरवल्लवावास्य राजसोंशो सो ब्रह्मा
यो हरवल्लवावास्य सात्विकोंशः स विष्णुरिति गुणत्रयोपाधितं ब्रह्मविष्णुरुद्राणां प्रति
पादितं तथा पुराणादिषु च सत्वं रजस्तमइति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुषएक इहा
स्य धत्ते स्थित्यादये हरिविरंचिहरेति संज्ञाः श्रेयांसि तत्र खलुसत्वतनोर्नृणां स्युरि
त्यादि सर्वपुराणेषु ब्रह्मविष्णुरुद्राणामेकैकगुणवत्वमेव प्रतिपादितं नहि मायाप्र
कृतिशक्त्यादिगुणत्रयवाच्यं वस्तु ब्रह्मातिरिक्तं स्वरूपकं भवति येन मायादिशब्दैरूपास्यं वा
स्तु मायाविशिष्टब्रह्मरूपमेवेति तैः शब्दैरूपास्यवस्तु निप्रतिपादितं मायाविशिष्टब्र
ह्मरूपमेव भगवतीरूपमुपास्यं भवेदिति बोधनार्थमेव मायादिशब्दैर्भगवत्याउपा
सनकथनमिति ननु तर्हि तत्वे सर्वाशक्तिः तेन न वीर्येत्यत्रापि मायाशब्दो ब्रह्मविशिष्टमा
यावाचकः स्यात्र वेद्यापत्तिः तत्र केवलायामायायापववविवदितत्वादिति चेन्न तत्रसत्या
भिः सर्वत्र मायाशब्देन मायाविशिष्टं ब्रह्मैव सर्वत्र ग्राह्यमिति शपथः क्रियते येनातिप्रसं ४

गः स्यात्किंतत्क्वचित्तेवं विधिनाब्रह्मसमभिव्याहारे केवलमायायाग्रहणं यथोत्तैव तथा नाशुभ्र
करणे केवलमायायाएवग्रहणं तथास्याहिस्थलेपि मन्मायाशक्तिसंक्लृप्तं जगत्सर्वं
चराचरं सापि मत्तः पृथक्विज्ञा नास्त्येवपरमार्थत इत्यादौ केवलमायायाग्रहणं ज्या।
स्नाम्स्थले तत्तद्दिशि ब्रह्मणो ग्रहणं मितिनियमादिदं तत्पर्यायग्रहणात् ज्ञेयं तथा
यथयम्रहणात् ज्ञेयं तथाच तत्त्ववैस्त्रवीशक्तिरित्यादावधिष्ठानब्रह्मरूपिणी यातत्त्ववैस्त्र
वीयामायाशक्तिरस्तितद्रूपिणी प्रसीदत्वित्यर्थः ब्रह्मणः सर्वाधिष्ठानत्वेन सर्वरूपत्वात् तेन
चब्रह्मरूपत्वमेवभगवत्याः प्रतिपादितं एवमन्यत्रापूर्वे यद्वा ब्रह्मणो जगत्कारणत्वेऽभ
यात्मकत्वात् क्वचिन्मायोपसर्जनेन ब्रह्मण उपासनं तत्रशक्तिः सद्वायभ्रूत्वादिदंचमतंशिव
पुराणादिषु स्पष्टं यस्मात्स्वहतयादेवं ब्यदिपद्रूपं तिरोषि वे तेषां प्रणष्टवक्तिकारणं तितेन
तेषां केदारवनेत्यादिवचननिचयात् क्वचिच्चब्रह्मोपसर्जनेन मायाया उपासनं तत्र भगव
ती विषये ब्रह्मोपसर्जनमायाया एवोपासनमिति दर्शयितं मायाशक्त्यादि [illegible]
भगवत्या अवहारः क्रियत इति इदं च मतं सर्वतन्त्राभिमतं पुराणाभिमतं च शिवेन सं
तो देवी भावयेद्भुवनेश्वरीमिति भुवनेश्वरीपारिजातादिवचननिचयात् तदुक्तं
कूर्मपुराणे अस्या ह्यनादिसंसिद्धमैश्वर्यमतुलं महत् तत्संबन्धादनेनैवाहं द्वेणपरमा

इ॰क॰
५

त्वमेवेत्यादीनि वचनानि देवीभागवतादिसर्वपुराणेषु द्रष्टव्यानि उभयपक्षेऽपि ब्रह्मणश्चिद्रू
प्योपासनायामागत एवेति नमस्कार्यपास्य स्वरूपानन्वयित्वरूपं दूषणं नवकाश इत्यतेति
इत्थं भगवदुपासनायां स्वरूपेति एणी नैव ब्रह्मविष्णुरुद्रणामुपासनात्मकस्योपासनावशि
ष्टस्य विचारः क्रियते तत्र सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्येन सर्वपदार्थमात्रस्य
ब्रह्मरूपत्वेऽपि भक्तानां चेतसोऽवलंबाय परमेश्वरेण मलिनसृष्टसृष्टतरसृष्टतमादि
भूतयः सृष्टितारतम्येन कल्पिताः तास्तु गीतादिग्रन्थेषु विभूत्यध्याये छान्दोग्यादिषु
च ग्रन्थे ब्रह्म आदित्यो ब्रह्म मनो ब्रह्मेत्यादिवाक्यैः प्रदर्शिताः तत्र च सर्वविभूतिषु ब्रह्म।
णः समानत्वेनावस्थानेऽपि यथा पात्रमणिकृपाणदर्पणादिषु सृष्टितारतम्येन प्रतिबिंबफल
स्यापि तारतम्यं एवं विभूतिषु च सृष्टितारतम्येनैव ब्रह्मणः प्रसादकरणतारतम्यं प्रतिबिं
बफलनतारतम्यं चेति याभिर्याभिर्विभूतिभिर्यथा यथा प्रतिबिंबफलनतारतम्यं प्रसा
दकरणतारतम्यं च भवति तथा तथा तस्या विभूतेः उत्कृष्टतमत्वमुत्कृष्टतरत्वमुत्कृष्टतमत्व
मित्यादिव्यवहारः सर्वग्रन्थप्रसिद्धो निर्विवादस्तथा च सति ब्रह्मविष्णुरुद्राणामेकैकग
णोपाधितो नैकैकगुणोपेतयासाम्यावस्थायास्त्रिगुणमूलभूताया आधिक्यो नैकैकगु
णोपाधिब्रह्मविष्णुरुद्रापेक्षया साम्यावस्थात्मकत्वेन तद्भेदात्तेषामपि तदात्मकत्वकथ। ५

5

नमित्याप्नुयात् अतएव तापनीये नृसिंहस्य सर्वोपहितत्वविलोकनात् रसे सर्वश्रुतिपुराणानि स्थिते
सत्यपि सामान्यावस्थात्मकत्वेन वर्णनं संगच्छते तस्मान्मायाशक्त्याख्ये ब्रह्मरूपे भगवत्युपासनेनैव मु
मोक्षः सर्वोत्कृष्टश्चेति सैव सर्वकामार्थिभिर्मुमुक्षुभिश्चोत्कृष्टैव रूपासनेच्छुभिराम्नायते त
द्योतनाय नमपि पुराणेतरवचनैः स्पष्टमुपपाद्यते तदुक्तं शिवपुराणे ब्रह्मविद्या जगद्धात्री सर्वेषां
जननी तथा यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरं सैव सेव्या वपूज्या च नान्यद्दैवतांतर
मिति तथा तंत्रेषु एवं यः पूजयेत् भक्त्या प्रत्यहं परमेश्वरीं भक्ताभोगान् तथा कामं देवीसायुज्य
माप्नुयात् यो न पूजयते नित्यं चंडिकां भक्तवत्सलां भस्मीकृत्यास्य पुण्यानि निर्दहेत् परमेश्व
रीति अनेन वचनेन भगवत्युपासनाख्याः सम्पादिकमेव त्रित्वं निरूपणोच्चारणेन स्पष्टमेव बो
धितं स्पष्टीकृतं चैतदस्माभिर्देवीभागवतटीकायां तथा पुराणांतरे आराध्या परमाशक्तिः सर्वै
रपि सुरासुरैः नातः परतरं किंचिदधिकं भुवनत्रये इति तथा ओंकाररूपिणीरूपेण गायत्री मा
तरं तथा पितरो यो न जानाति स विप्रस्त्वन्यरेतज इति तथा कालिकामते धिक् धिक् धिक् धिक्
च तं जन्म यो न पूजयते शिवां जननीं सर्वजगतां करुणारससागरामित्यादि पुराणेषु तंत्रेषु च
बहूनि वचनानि द्रष्टव्यानि विस्तरस्तु मत्कृत शाक्ततत्त्वविमर्शिन्यां द्रष्टव्यः इत्थं शाक्ततत्त्वस्य
सर्वोत्कृष्टस्य सर्वैरुपास्यस्योपासनाप्रकारास्त्वधिकारिभेदेनानेकविधाः पूजास्तोत्रमंत्रजपध्या

ड·क·
६
6

नलयरूपाः तदुक्तं भुवनेश्वरीसंहितायां पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः जपकोटिसमं
ध्यानं ध्यानकोटिसमो लय इति पूजा च चतुःषष्ठिसंख्योपचारषोडशोपचारपंचोपचारभेदेन त्रिवि
धा मंत्राश्च मायाबीजादयो बीजरूपा गायत्र्यादयो रूपास्तदितरिक्ताश्च नवार्णप्रभृतयो वैदिका
देव्यथर्वशिरसि भुवनेश्वरीतापनीयादिषु प्रसिद्धाः तैत्तिरीयशाखायां श्रीश्च ते लक्ष्मीश्च पत्न्यावि
ति कंठरवेणोक्तोपासनास्तांत्रिकाश्च चतुःषष्टितंत्रेषु प्रसिद्धा एव ध्यानलयादयस्तु तंत्रेषु योगशास्त्रेषु
शैवताश्वतराद्युपनिषत्सु च ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढामित्यादिवा
क्यैः प्रतिपादिताः स्तोत्राणि च सप्तशत्यादीनि मार्कंडेयपुराणादिषु प्रसिद्धानि तत्र स्तोत्रेषु स्तो
त्रहृदयं सप्तशतीरूपं कूर्मपुराणे तर्गितं देवीसहस्रनामाख्यं च तंत्रेषु बहुधैतयोर्माहात्म्यप्र
तिपादनात् स्तोत्रहृदयेपि सप्तशत्याख्यमेव मुख्यं सर्वेषां स्तोत्राणां मंत्ररूपत्वात् चतुःषष्टितंत्रेष्व
पि तस्यैव माहात्म्येन प्रतिपादितत्वाच्च उक्तं च वेदागमे निर्विशेषपरा मंत्राः सविशेषपरा मंत्राः स
विशेषपराश्च ये प्रत्यग्यायांति गूढास्ते तेनेयं सर्वतः परेति रुद्रयामले च शक्तिगुप्तमं देव्या
माहात्म्यं सर्वसिद्धिदं वाक्यैरर्थैश्च पदैश्च सप्तशत्यात्मकं शुभं सविशेषपरं सा तत्वाविद्धि किमद्वि
माश्रयं तात्पर्यगत्या तत्कृत्स्नं निर्विशेषविदाश्रयमिति तस्य च सप्तशतीस्तोत्रस्य कवचादित्रयं ६
न तंत्रा तदस्यैवांगं भवति वचनप्रामाण्यात् तदुक्तं कात्यायनीतंत्रे अंगहीनो यथा देही सर्वकर्मसु

हनं तमः ष्डंगषट्कविहीना तु तथा सप्तशती स्तुतिः तस्मादेतत्पठित्वैव जपेत्सप्तशतीं पु
रां अन्यथा पापमाप्नोति हानिं चैव पदे पदे रावणाद्याः स्तोत्रमेतदंगहीनं निषेविरे हता राम
णेनैव यस्मात्त्वांगहीनं पठेन्नत इति तद्यथा मतिर्व्याख्यायते तत्र कवचांशो ब्रह्मणे प्रतिपा
द्नं करोति मार्कण्डेयः ॥ ॥

दु॰गा॰ यद्गुह्यमिति लोके यत्परममत्यन्तं गुह्यं गोप्यं रहस्यमस्ति तन्मे ब्रूहीति किंब्रह्मरूपं नेत्याह सर्वर
७ क्षाकरं येन सर्वेषामपि रक्षा भवति नृणां पामरप्रमत्तीनामपि ताहशामित्यर्थः अत्यन्तममा।
धिकारिणामेव रक्षकं न सर्वेषामित्यर्थः ननु सन्त्यन्यानि कवचानि लोके इति चेत्सत्यं सन्ति त
थापि यद्भवता कस्यचित्कस्यापि नाख्यातं निधिवद्गुप्तास्यापि तन्मास्ति तदित्यर्थः तेन च निःसंश
यमेव रक्षणं झटिति स्यादिति भावः अन्यथा निधिवद्गुप्तानस्य रक्षणं निरर्थकं स्यादिति ननु कि

श्रीमार्कण्डेय उवाच यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणां यन्न कस्यचिदाख्यातं
तन्मे ब्रूहि पितामह १ ब्रह्मोवाच अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम्
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने २

मित्याह गुह्यं वस्तु मया देयमिति चेत् तत्राह
हे पितामह त्वसंततिरक्षणार्थं पितामहेनावश्यं देयमित्यर्थः १ उत्तरमाह ब्रह्मोवाच अ
स्ति गुह्यतमं विप्रेति हे विप्र तया यत्गुह्यं ताहशं देव्यास्तु देव्या एव कवचं पुण्यमेकं निधिवद्गुप्ता।
स्यापि तन्मास्ति तन्महामुने शृणुष्व सर्वभूतोपकारार्थं प्रवृत्तत्वात् महामुने इति संबोधनम्। ७
२ ॥ २ ॥

परंतु सा देवी नवमूर्त्यात्मिकाऽस्त्येवेत्यभिप्रायेण तासां मूर्तीनां नामान्याह प्रथमं शैलपुत्री
ति नामज्ञानेनाऽतेन ह्याकारस्य प्रसिद्धत्वाद् देवज्ञानं भविष्यतीति भावः सर्वोन्नते पर्वतवत्स्
पि भगवती शैलेन भक्तेनाऽतितपश्चर्यया प्रार्थिता सती कारुण्यवशादिति नीच मपि पुत्रीत्वे
स्वीकृतवती तद्धो भक्तवात्सल्यं कियद्वर्णनीयं भगवत्या इति कूर्मपुराणे प्रसिद्धं ब्रह्मचा
रिणीति ब्रह्मचारिणीति ब्रह्म सच्चिदानंदरूपं तच्चारयितुं प्रापयितुं शीलमस्याः ब्रह्म
चारिणी ब्रह्मरूपप्रदेत्यर्थः चंद्रघंटेति चंद्रो ह्लादकता यस्याः घंटावत् निर्मला वाग्येस्याः

प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी तृतीयं चंद्रघंटेति कूष्मांडेति चतुर्थकं २

स्या इत्यर्थः यद्वा आह्लादकारिणी देवी चंद्रघंटेति कीर्तितेति रहस्यागमोक्तेः चंद्रघंटयति प्र
तिवादितया भासते स्वस्याह्लादकारित्वाभिमानेनेति चंद्रघंटा चंद्रापेक्षयाप्यतिशयेन ह्लादवत्येवती
त्यर्थः पदपुटेति दंडकपठितस्य चुरादीयं दिधातोर्भाषायां घंटस्य पचाद्यचि रूपं चंद्रस्य घंटे दाव
इत्येदा कूष्मांडेति कुत्सित उष्मा संतापस्तापत्रयरूपो यस्मिन् संसारे स संसारोऽण्डे मांसपे
श्यामुदररूपायां यस्याः त्रिविधतापयुक्तसंसारभक्षणकर्त्रीत्यर्थः अण्डः पेशीचमष्कं
चेति मेदिनी २ ॥ ॥ ॥ ३ २ ॥ ॥

दु॰ क॰ ८

स्कंदमातेति सनत्कुमारस्य भगवती वीर्यादुद्भूतस्य स्कंद इति संज्ञा भगवान् सनत्कुमारस्तं स्कंद
इत्याचक्षत इति छांदोग्यश्रुतेः तथाच स्मार्त्तैरपि यदुदितं जन्माभिलषणीयमिति श्रुइत्यर्थ
कात्यायनीति देवकार्यार्थं कात्यायनाश्रमे आविर्भूतानेन कन्यात्वेन स्वीकृतेति कात्यायनी।
ति नाम भगवत्याः अस्यास्निरंतरं कुमारीत्वेन पत्यनधीनतया स्वतंत्रत्वं कालरात्रीति सर्वमार
कस्य कालस्यापि रात्रिर्नाशिकेत्यर्थः प्रलये कालस्यापि नाशनात् हृदि कालादं क्लिन इति।

पंचमं स्कंदमातेति षष्ठं कात्यायनीति च सप्तमं कालरात्रीति महागौरीति चाष्टमं ४
नवमं सिद्धिदा प्रोक्ता नवदुर्गाः प्रकीर्त्तिताः उक्तान्येतानि नामानि ब्रह्मणैव महा।
त्मना ५

ङीप् महागौरीति इयं च महामानिनी नर्मोक्त्या शिवेन कालीत्युक्तेन तपसा गौरवर्णस्य संपादि
तत्वा कालीपुराणे स्पष्टमेतत् ४ सिद्धिदेति मोक्षदेत्यर्थः इति विशेषः सिद्धिदेति नवममित्य
न्वयः नवदुर्गा इति योगिनः कायव्यूहवदेकस्या एव दुर्गाया एते नव भेदा ये पूज्या स्तेऽप्येयतेन
प्रोक्ता स्तेम या कीर्त्तिता इत्यर्थः सर्वत्र एव देव्या स्तकयत्र चामित्येकवचनेन संगच्छते नाम्नां स्तका।
ल्पितत्वं प्रोक्ता बुद्धा स्यार्थमाह उक्तान्येतानीति महात्मना सर्वज्ञेन ब्रह्मणैव वेदेनैवैतान्युक्ता

र्ग्यं कवचपाठेऽप्येवं देवतास्वरूपं प्रदर्श्य तत्फले अविश्वासो नैव कर्तव्य इति कैमुतिकन्या-
येनाह अग्निनेति यो अग्निना दह्यमानो रणे शत्रुमध्ये च गतः सन् शरणं गत इति शेषः अथ ये
विषमे दुर्गमे चातिसंकटे भयार्ता भयपीडिताः सन्तः शरणं गताः ६ तेषां तस्य च भक्तिरहिते

अग्निना दह्यमानस्तु शत्रुमध्यगतो रणे। विषमे दुर्गमे चैव भयार्ताः श-
रणं गताः ६ न तेषां जायते किंचिदशुभं रणसंकटे नापदं तस्य पश्या-
मि शोकदुःखभयं न हि ७ यैस्तु भक्त्या स्मृता नूनं तेषां सिद्धिः प्रजा-
यते प्रेतसंस्था तु चामुण्डा वाराही महिषासना ८ ऐन्द्री गजसमारू-
ढा वैष्णवी गरुडासना माहेश्वरी वृषारूढा कौमारी शिखिवाहना ९
ब्राह्मी हंससमारूढा सर्वाभरणभूषिता नानाभरणशोभाढ्या ना-
नारत्नोपशोभिताः १०

न स्मरणमात्रेणापि तज्जन्यं भयादिकं न भवतीत्याह न तेषामिति ७ यैस्तु भक्त्या स्मृता भ-
वन्ति तेषां पूर्वोक्तं फलं सिद्धिः धर्मार्थकाममोक्षाणां च भवतीत्यत्र किं वक्तव्यमित्याह यैरि-
ति ८ इदानीं देव्या अतिवात्सल्यं दर्शयति भक्त्युत्पादनार्थं प्रेतसंस्थेति तत्र सप्तमातृणां वा-

दु॰क॰
९

वक्ष्यमाणाद्देव्याः दृप्तदर्पं नइति सप्तमात् भिन्ना याश्च देव्यस्ता अपि निकृन्तनार्थं क्रोधसमाकु
ला रथमारूढा जातैः कवचैर्नैरथा नारूढा दृप्तदर्पे अर्थात् देवादिभिरिति तासामायुधान्या
हृष्टां खेमिति १२ दैत्यानिति ताः सप्तमातरः खड्गं खेटं चक्रमित्यादिश्लोकोक्तानीत्यायुधा
नि धारयन्तीति किमर्थं दैत्यानां देहनाशनार्थं भक्तानामभयार्थं देवहितार्थं चेत्यर्थः अयं भावः अपा
र्थिता अपि पितामहत्यो देवताः जगद्रक्षणे वत्सलतयैव प्रहृष्टा मातावत्सलाः कृता नमद

दृप्तदर्पे रथमारूढा देव्याः क्रोधसमाकुलाः। खड्गं खेटं चक्रं गदां शक्तिं हलं च मुस
लायुधं ११ खेटकं तोमरं चैव परशुं पाशमेव च। कुन्तायुधं त्रिशूलं च शार्ङ्गमायु
धमुत्तमं १२ दैत्यानां देहनाशाय भक्तानामभयाय च। धारयन्त्यायुधानीत्थं
देवानां च हिताय वै १३ महाबले महोत्साहे महाभयविनाशिनि। त्राहि
मां देवि दुःप्रेक्ष्ये शत्रूणां भयवर्द्धिनि १४

भाष्येन स्वरक्षणार्थं प्रार्थ्यतइति १३
कवचे पाठस्यादावित्थं प्रार्थनामन्त्रं पठित्वा पश्चात् कवचं पठनीयमित्यभिप्रायेणाह म
हाबले इति महद्बलं मायाशक्तिरूपं यस्याः महानुत्साहो जगद्रक्षणे यस्याः म
हाभयं मरणरूपं तस्य ज्ञानदानेन नाशिनी दुःप्रेक्ष्ये दुर्दर्शनीये येन सह दृष्टा तिष्ठति रूपमस्ये
ति शत्रुतेः शत्रूणां कामक्रोधादिकानाम् १४ ॥ १४

प्राच्यामिति प्राच्यां दिशि स्थिता ऐन्द्री इन्द्रशक्तिर्मां रक्षत्वित्यर्थः प्राच्यां स्थितं मामिति वा एव
मग्रेऽपि शक्तिशक्तिमतोरभेदादग्निरूपा देवताग्निशक्तिरित्यर्थः अवत्वित्यत्र
हन्तिरादौ वराहाणां हन्तीति स्ववाहोऽयमः आर्षः प्रयोगः तस्य शक्तिर्वाराही अनेन ताडनीय
यशक्तिरित्यर्थः दशदिक्पालप्रकरणात् सप्तमातृगणगता वा वाराही देवाराद्दिदक्षि
णे देशे स्थिता मां रक्षत्वित्यर्थः स्थितं मामिति वा खड्गधारिणी निरृतिशक्तिरित्यर्थः १५

प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता दक्षिणे रक्षतु वाराही नैरृत्यां खड्ग
धारिणी १५ प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी रक्षेदुदीच्यां कौमा
री ऐशान्यां शूलधारिणी १६ ॥

रक्षत्वित्यस्य मध्ये विच्छेदादध्याहारः कर्त्तव्यः मृगवाहिनी वायुदेवताया मृगवाहनत्वा
द्वायुशक्तिरित्यर्थः रक्षेदित्यनुवृत्तिः कौमारी कुत्सितो मारो मदो यस्य स कुमारः कुबेरः
तस्येयं शक्तिः कौमारी दिक्पालप्रकरणात् यद्यपि कौबेरी रक्षणस्थानमग्रे वक्ष्यमाण
मस्ति तथाप्येकस्यापवस्थानद्वयरक्षकत्वे बाधकाभावः सप्तमातृगणगता वा शूलधारिणी
ईशानशक्तिरित्यर्थः १५ ॥ १६ ॥

ङ·क· ब्रह्माणीति ब्रह्माणमानयति जीवयतीति कर्मण्यण् हे ब्रह्माणि ऊर्ध्वस्थिता भगवती मे मां रक्षेदित्य
१० र्थः मेरूर्ध्वमार्गमिति निवासत्वमिति दशदिक्पालदेवतावृन्दे वमेशानि शेवः मे ममत्वं वर्तिनी दशादिशा
श्चामुण्डा रक्षेदित्यर्थः। दशादिक्षु स्थिता श्चामुण्डा मां रक्षेदिति पर्यवसितोऽर्थः अन्यथा केवलदि
ग्रक्षणे प्रयोजनाभावः ८ जयाशक्तिः स्यात् निबद्ध आर्षः प्रयोगः मन्त्ररक्षणार्थं शिखा।।

ऊर्ध्वं ब्रह्माणि मे रक्षेदधस्ताद्वैष्णवी तथा एवं दशदिशो रक्षेच्चामुण्डा शववाहना ८
जया मे चाग्रतः स्यात् विजया स्यात् पृष्ठतः अजिता वामपार्श्वे तु दक्षिणे चापराजिता
शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता मालाधरी ललाटे च भ्रुवौ रक्षेद् यश-
स्विनी १९ त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयो
द्वारवासिनी २० कपोलौ कालिका रक्षेत् कर्णमूले तु शङ्करी नासिकायां सु
गन्धा च उत्तरोष्ठे च चर्चिका २१

मिति उद्योतिनीनामिका देवी मम शिखां संस्थिता स
ती मद्भिरलौ रक्षेदिति प्रत्यय एवं सर्वत्र योजनीयं उमा मूर्ध्नि व्यवस्थिता सती मूर्धानं रक्षेदित्य
र्थः एवं सर्वत्र यथायोग्यमध्याहार्यं १९ नासिके नासिकापुट इत्यर्थः अन्यत्र नासिकाग्र

१० [illegible] २० २४

अपरेऽपरोष्ठ इत्यर्थः २३ कंठस्य बहिर्भागो बहिःकंठः नलिका कंठनाले २४ स्कंधमार-
भ्य कूर्परपर्यंतो भागो बाहुस्तदारभ्यांगुलिपर्यंतो हस्तः २५ कक्षाविति समस्तपाठः

घंटिकां चित्रघंटा च महामाया च तालुके कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमंगला २३
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी नीलग्रीवा बहिःकंठे नलिकां नलकूबरी २४
खड्गधारिण्युभौ स्कंधौ बाहू मे वज्रधारिणी हस्तयोर्दंडिनी रक्षेदंबिका चांगुली-
षु च २५ नखांछूलेश्वरी रक्षेत्कक्षौ रक्षेन्नलेश्वरी स्तनौ रक्षेन्महादेवी मनःशो-
कविनाशिनी २६ हृदयं ललिता देवी उदरे शूलधारिणी नाभिं च कामि-
नी रक्षेद्गुह्यं गुह्येश्वरी तथा २७ भूतनाथा च मेढ्रं च गुदं महिषवाहिनी कट्यां
भगवती रक्षेज्जानुनी विंध्यवासिनी २८ जंघे महाबला प्रोक्ता जानुमध्ये विना।
यकी गुल्फयोर्नारसिंही च पादपृष्ठे मितौजसी २९ ॥

प्राचीनसंमतः २६ २७ जानुनी विंध्यवासिनीति पाठः २८ प्रोक्तागमादिष्वशेषु या
महाबलाद्येत्पाठः २९ ॥ २९ ॥ २९ ॥ २९ २९ ॥ २९

ड·क·० पादाध इति भिन्नं पदं तलवासिनी पातालतलवासिनीत्यर्थः यद्यपि नखो ऽङ्गुलेश्वरी रक्षेदि
११ त्रनखरत्नेनाम्नोक्ता तथापि पर्यैकस्या अपि देवतायाः स्थानद्वयरक्षकत्वेन विरुध्यते तथैव
देवताद्वयस्यैकस्थाननिरूपितरक्षकत्वे बाधकाभाव इत्यभिप्रायेणेन नखानू दंष्ट्राः कराली
चेत्युक्तं श्रोत्राणीति अमृथानो ऽन्नेऽन्नानासिकस्यैति दीर्घः पद्मकोशे पद्मं हृदयादिरूप
मेव कोशे वासस्थानं यस्य प्रवासस्य तस्मिन्नातिस्थिता सती रक्षतीति यावदिति केचित्

पादाङ्गुलीः क्षीपरी च पादायस्तलवासिनी नखान् दंष्ट्राः कराली च केशांश्चैवोर्ध्वके-
शिनी २० रोमकूपाणि कौबेरी मनं वागीश्वरी तथा रक्तमज्जावसामांसान्यस्थिमेदांसि
पार्वती २१ अन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी पद्मावती पद्मकोशे कफे चू-
डामणिस्तथा २२ ज्वालामुखी नखज्वालामभेद्या सर्वसन्धिषु मज्जं ब्रह्माणि मे रक्षे।

अन्त्राणां रक्षणं कथनात् पद्मकोशवर्तीका हृदयं वाच्यो भवतीति स्मृत्युक्तं हृदयमेव
पद्मकोशशब्देन ग्राह्यमित्यपरे २१ चूडामणिनाम्नी देवता रक्षास्वरूपे प्रसिद्धा २२ नखज्वा
ला नखोत्थितेजः अभेद्या नाम्नी देवता सर्वसन्धिषु स्थिता सती सर्वसन्धीन् रक्षत्वित्यर्थः इ
बलानि भवतीमेऽस्तु रक्षत्वित्यर्थः २२ २२ ॥ ११

हे धर्मचारिणि अहङ्कारमित्यत्राहङ्कारः रक्षेति मध्यमपुरुषात् २४ हे इन्द्राणि भवती त्वथाहङ्कारः २५ २६
रक्षाहीनमिति यत्स्थानं रक्षया हीनं भवति कुत इति चेत् कवचेन तु वर्जितं कवचेन तत्स्थानं स्था
हीनं न कृतोऽतः तत्सर्वं रक्ष मे देवि यतस्त्वं जयन्ती सर्वोत्कृष्टा पापनाशिनी भवसि २७ अथ
पितामहः फलस्तुतिं वक्तुमधिकारिणं प्रथममुपदिशति पदमेकमिति यदिच्छुभमात्मनः इ

अहङ्कारं मनो बुद्धिं रक्ष मे धर्मचारिणी प्राणापानौ तथा व्यानमुदानं च समानकं २४
यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु चक्रिणी गोत्रमिन्द्राणि मे रक्षेत् पशून्मे रक्ष चण्डिका २५
पुत्रान् रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी मार्गं क्षेमकरी रक्षेद्विजया सर्वतः स्थिता २६
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी २७ प
दमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः कवचेनावृतो नित्यं यत्र यत्राधिगच्छति २८

च्छेत् तर्हि स पुरुषः कवचेन रहितमेकं पदमपि न गच्छेत् इति क्षणमात्रमपि देवीस्मरणं विना
न त्यजनीयमिति तात्पर्यं तदुक्तं पुराणेषु स्वपन् तिष्ठन् व्रजन् मार्गे प्रलपन् भोजने रतः कीर्तये
त्सततं देवीं स वै मुच्येत बन्धनादिति इत्युपदिष्टफलं कथयति कवचेनेति २८ २८ ॥

ड·क· १२ ३९ ४० ४१ देवीकलाविकला ४२ ४३ अभिचारादिपरकला नि ४४ कुलजादयोऽष्टदेवता।
जातिभेदाः श्रोपदेशिकाः उपदे
तत्र तत्रार्थलाभश्च विजयः सार्वकामिकः यं यं चिंतयते कामं तं तं तं प्राप्नोति निश्चितं
३९ परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् निर्भयो जायते मर्त्यः संग्रामेष्वपरा
जितः ४० त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् इदं तु देव्याः कवचं देवाना
मपि दुर्लभं ४१ यः पठेत्प्रयतो नित्यं त्रिसंध्यं श्रद्धयान्वितः देवीकला भवेत्तस्य त्रैलो
क्येष्वपराजितः ४२ जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः नश्यंति व्याधयः सर्वे लू
ताविस्फोटकादयः ४३ स्थावरं जंगमं चापि कृत्रिमं चापि यद्विषं अभिचारा
णि सर्वाणि मंत्रयंत्राणि भूतले ४४ भूचराः खेचराश्चैव जलजाश्चोपदेशिकाः
सहजाः कुलजा माला डाकिनी शाकिनी तथा ४५ अंतरिक्षचरा घोरा डाकि
न्यश्च महाबलाः ग्रहभूतपिशाचाश्च यक्षगंधर्वराक्षसाः ४६ ब्रह्मराक्षसवे
तालाः कूष्मांडा भैरवादयः नश्यंति दर्शनात्तस्य कवचे हृदि संस्थिते ४७

जातिभेदाः श्रोपदेशिकाः उपदेशेन तन्मात्रेण ये सिध्यंति ते क्षुद्रदेवताभेदाः राज्ञः सकाशा १२

४८ अथ नारायणप्रार्थ्यं गतं कवचस्य विधानेन जपेदित्याह प्रथमतः यत इति अनंतनागो यावद्भूमंडले
धत्ते पारयति तावदित्यर्थः परमं स्थानं मोक्षरूपं ज्ञानद्वारा प्राप्नोति नित्यं नियमेन महामायायाः सर्व
कारणमायायाः शबलब्रह्मरूपायास्तस्याः प्रसादतः ४९ ५० यमैवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वि

मानोन्नतिर्भवेद्राज्ञा तेजो वृद्धिकरं परं यशसा वर्धते सोऽपि कीर्तिमं
डितभूतले ४८ जपेत्सप्तशतीं चंडीं कृत्वा तु कवचं पुरा यावद्भूमं
डलं धत्ते सशैलवनकाननं ४९ तावत्तिष्ठति मेदिन्यां संततिः पु
त्रपौत्रिकी देहांते परमं स्थानं यत्सुरैरपि दुर्लभम् ५० प्राप्नो
ति पुरुषो नित्यं महामायाप्रसादतः ५१ इति देवीकवचं समा
प्तम् ॥ ॥

वृणुते तनूं स्वामिति श्रुतेः यथ तां मायां प्राक् किं वेद सम्यक् त्वं जयति स पाप्मानं तरति सोऽस्म
तत्त्वं च गच्छतीति श्रुतेः अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिरिति श्रुतेश्च पार्वतीप
रमा विद्या ब्रह्मविद्याप्रदायिनी विशेषेणैव जंतूनां नात्र संदेहकारणमिति निरूतं हि तोके

श्र कवचेऽस्मिन्सार्थपंचाशत्संख्यश्लोकसंग्रहः ५१

अपिकावृन्ततादोषपरिहारचिकीर्षया देवीनां क्रमस्यापि कथनं क्रियते मया तेच क्रमो
काः प्राचीनग्रंथस्थाः सांप्रदायिकाः प्रविलिख्यंते दक्षादिग्पालदेव्यश्चामुंडा च ततः परं ज
या च विजया चैवाप्यजिता चापराजिता १ उद्योतिनी ततश्चोमा मालाधारी यशस्विनी त्रि
नेत्रा यमघंटा च शूलिनी हारवासिनी २ कालिका प्रेतकारी पश्चात्खगंधा चर्चिका तथा
अम्बताटिकल्पा पश्चात् ततः स्यात्सरस्वती ३ कौमारी चंडिका चित्रघंटा मायामहादिका
कामाख्यानंतरं सर्वमंगला भद्रकालिका ४ धनुर्धरी नीलग्रीवा ततः स्यान्नलकूवरी ए
कधारिणिका पश्चाद्वज्रधारिण्यनंतरम् ५ दंडिनी चांबिका शूलेशानी स्यान्नलेश्वरी
मनःप्रोक्तविनाशः स्याज्ज्वलिता शूलधारिणी ६ कामिनी गुह्यसूक्ष्मा स्याद्दीश्वरी च ततः
परं भूतनाथा ततः स्याच्च महामहिषवाहिनी ७ भगवत्यपि विंध्यस्था महाशूर्वा बला
तथा विनायकी नारसिंही ततः पश्चान्मितौजसी ८ श्रीधर्षिनवपातालवासिन्यंते
कपालिनी ऊर्ध्वकेशी च कौबेरी वागीश्वरी पार्वती तथा ९ कालरात्रिश्च मकुटेशानी पा
द्मावती तथा चूडामणिस्तथा ज्वालामुख्यमेया ततः स्मृता १० सुलोचनी च सर्वास्या
दीश्वरी धर्मचारिणी चक्रिणी इंद्रवधूश्चंडी महालक्ष्मीश्च भैरवी ११ क्षेमंकरी पश्चाद्दिज
या च जयंतिका इत्येताः समाख्याताः कवचस्याश्च शक्तयः १२ इति श्रीशैवोपनामकरे
गमहं सृतजलसीगर्भजनीलकंठभट्टकृतं सप्तशत्याः कवचविवरणं समाप्तिमगमत् ॥ ॥

दु॰ अ॰ अथार्गलाव्याख्यानं तत्र प्रथमतो देवताया उद्देशरूपायागुणान् ध्यानीय योगीनाह जयंतीति
१८ जयंती सर्वोत्कृष्टेत्यर्थः गुणत्रयसाम्यावस्थोपाधिकब्रह्मरूपिण्या भगवत्याः सर्वकारणत्वा
त् मंगला मंगं जननमरणादिरूपं सर्पणं भक्तानां लाति गृह्णाति नाशयति मोक्षप्रदा मंग
लेत्युच्यते न तस्य प्राणा उत्क्रामंतीति श्रुतेः काली कलयति भक्षयति सर्वमेतत्प्रलयकाले इ
ति काली ब्रह्मक्षत्रे चोभे भवत ओदनः मृत्युर्यस्योपसेचनमिति श्रुतेः भद्रकाली भद्रं मंगलं सु

मार्कंडेय उवाच जयंती मंगला काली
भद्रकाली कपालिनी

खं कलयति स्वीकरोति भक्तेभ्यो दातुमिति भद्रकाली भद्रकाली सुखप्रदेति रहस्यागमे
ऽर्थकथनात् कपालिनी कपालो स्त्री शिरोस्थि स्यात् घटादेः शकलेपि च इति मेदिनीको
शात् ब्रह्मादीन् निहत्य तेषां कपालं गृहीत्वा प्रलयकाले अटतीति प्रपंचरूपा भुजे हस्ते
यस्या इति वा कपालिनी मत्वर्थीय इनिः प्रपंचो भुजहस्ताव कपालिन्युच्यते परे इति रहस्या १८

दुर्गाद्दुःखेनाष्टाङ्गयोगसर्वकर्मोपासनारूपेण क्लेशेन गम्यते प्राप्यते सा दुर्गा तां दुर्गां दुर्गमां
देवीमिति देव्यथर्वशिरसः त्वमाभक्तानामन्येषां वा सर्वानपराधान् क्षमते सहते जननीत्वा
त्सातिशायिकारुण्यवती त्वमेतत्क्षम्यते शिवा चिद्रूपिणी स्वार्थैः चिन्मात्राश्रयमायायाः।
शक्त्याकारे द्विजोत्तमाः अनन्तशक्तिक्षायासंवित्रिर्विकल्पा स्वयंप्रभा सदाकारा सदा संसारो

दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते १

च्छेदकारिणी सा शिवा परमा देवी शिवाभिन्ना शिवंकरी निरुक्तसंहितोक्तेः धात्री सर्वत्र
पंचधारणकर्त्री अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः अहं मित्रावरुणौ।
भाविभर्म्यहमिन्द्राग्नी अहमश्विनौ भेत्यादिश्रुतेः स्वाहा देवपोषिणी स्वधा पितृपोषि
णी १ श्रीरामजी ॥ १ ॥ श्री १ ॥ २

दे० अ०
१५

एतादृशाय एवं लोकमहागुणवतीयात्वमसि ततस्ते तुभ्यं नमो नमस्कार एवास्तु केवलं न तु नाह
मुपाःपरिचर्यायाः सामर्थ्यमस्तीति भावः १ मधुकैटभयोर्विद्राविणी नाशिनी च सा विधात्र
वरदा चेत्यर्थः मधुकैटभनाशपूर्वं ब्रह्मणा स्तुता सती तस्मै वरं ददाविति कथा देवीभागवते
प्रथमस्कंधे प्रसिद्धा रूपं रूप्यते ज्ञायते इति रूपं परमात्मवस्तुस्वरूपं भवेदिं दुरमंदकांतिरि।
मागमाग्रहे देहि मत्स्यं मल्लक्तनमस्कारेणैव प्रसन्ना सती तथा जये जयत्यनेन परमात्मनः स्वरू

मधुकैटभविद्राविविधात्रवरदे नमः रूपं देहि जयं देहि यशो देहि द्विषो जहि २
महिषासुरनिर्नाशविधात्रीवरदे नमः रूपं देहि जयं देहि यशो देहि द्विषो जहि ३
वंदितांघ्रियुगे देवि देवि सौभाग्यदायिनि रूपं देहि जयं देहि यशो देहि द्विषो जहि ४

पमिति जयो वेदस्मृतिराशिः ततो जयमुदीरयेदित्यत्र प्रसिद्धस्तं देहि यशो देहि सुहृन्नो यशा
इति श्रुतिप्रसिद्धं तत्तज्ज्ञानसंपादनजन्यं यशस्तदृहे देहि द्विषो जहि कामक्रोधादीन् शत्रून् जहि
नाशय २ महिषासुरेति महिषासुरस्य निर्नाशेन सा विधात्री कर्त्री त्यर्थः वरदे इति शेष
कपर्दं ३ वंदितेति ब्रह्मविष्ण्वादिभिर्वंदितमंघ्रियुगं यस्यास्तेषामेतदपेक्षयात्मनोपाधि

कत्वात् भक्ताभिप्रायेन देवीत्यस्य पुनरुक्तिः प
१५